यदुकुलवररत्नं कृष्णमन्यांश्च देवान् ।
मनुजपतिखगादीन् ब्राह्मणादींश्च जाने ॥
परमसुखसमुद्रे मज्जनात्तन्मयोऽहम् ॥
गलितनिखिलभेदः सत्यबोधैकरूपः ॥ ७ ॥

इति श्रीपरमहंस-परिव्राजकचार्य-श्रीमत्स्वयं प्रकाशानन्दसरस्वती-
पूज्यपादशिष्य-भगवन्महादेवसरस्वतीमुनिविरचिते तत्त्वा-
नुसन्धाने चतुर्थः परिच्छेदः । समाप्तश्चायं ग्रन्थः ।
ओं तत्सत् ॥ शुभं भवतु ॥

---

न पश्यामीत्याह— **यदुकुलेति** ॥ तत्र हेतुमाह— **परम-
सुखेति** ॥

उपासकानां कार्यार्थं तमसो विनिवर्तकम् ॥
श्रीकृष्णस्य गलेऽद्वैतचिन्ताकौस्तुभमर्पितम् ॥ १ ॥
अध्यारोपापवादोन्मृदितजडतनुर्द्वैतहेतुः परात्मा ।
आम्नायान्तैकगम्यः श्रुतिमतिसहितध्यानयोगेन सम्भे ॥
चीर्णे साक्षात्कृतोऽसौ मुनिवरनिकरैः शुद्धसत्त्वैरुदारैः ॥
मुक्तैर्गम्यो मुकुन्दो यदुकुलतिलकः श्रेयसे भूयसेऽस्तु ॥ २ ॥
जिज्ञासितव्यो विमलान्तरङ्गैरानन्दविज्ञानसदेकरूपः ॥
वेदान्तवेद्यो यतिवर्यगम्यो गोपीजनेशः प्रदिशत्वभीष्टम् ॥ ३ ॥

वाणीति वेदवचनानि वदन्ति देवीम् ।
यामात्मयोगिगृहिणीं हृदये स्मरन्ति ॥
यच्चिन्तया सकलशास्त्रकृतो भवन्ति ।
तामानतोऽस्मि सततं प्रणतेष्टदात्रीम् ॥ ४ ॥
दुरन्तसंसारमहाम्बुराशेः समुद्धृतो येन कृपालुनाऽहम् ।
महत्तमं तं पुरुषोत्तमं श्रीस्वयंप्रकाशं गुरुमानतोऽस्मि ॥ ५ ॥
यन्नामरूपाणि निरस्य वेदो यद्बोधयेन्नित्यनिरस्तमोहम् ।
प्रत्यक्स्वरूपं परिपूर्णरूपमहं तदेवास्मि विमुक्तमव्ययम् ॥ ६ ॥

इति श्रीमत्परहंसपरिव्राजकाचार्य-श्रीमत्स्वयंप्रकाशानन्दसरस्वती पूज्यपादशिष्य-भगवन्महादेवानन्दसरस्वतीमुनिविरचिते तत्त्वानुसंधानव्याख्यानेऽद्वैतचिन्ताकौस्तुभे चतुर्थः परिच्छेदः समाप्तः ॥

ओं तत्सत् । शुभमस्तु ॥

---